# जैनदर्शने कालद्रव्यम् : तुलनात्मकमध्ययनम्

आचार्यः डॉ. अनेकान्तकुमारजैनः
जैनदर्शनविभागाध्यक्षः
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
(मा.विश्वविद्यालयः), नवदेहली- 110016
मो. 9711397716

जैनपरम्परायाम् भगवतः महावीरस्य पश्चात् आचार्य उमास्वामी तत्त्वार्थसूत्रे, आचार्यकुन्दकुन्दः स्वपंचास्तिकाये, समयसारे एवं प्रवचनसारग्रन्थे च तथा च आचार्यनेमिचन्द्रेण द्रव्यसंग्रहे द्रव्योपरि व्यापकदृष्ट्या चिन्तनं कृतम्।

**द्रव्यस्य स्वरूपम्**

द्रव्यपदार्थः, तत्त्वम् एवं सत् एतेषां शब्दानां विभिन्नैः सम्प्रदायैः प्रयोगः कृतः तथा च स्वचिंतनानुरूपं एषां व्याख्यानमपि कृतम्। जैनदर्शने एतेषां शब्दानां प्रयोगः तथा उपयोगः आगमयुगतः अद्यावधिपर्यन्तं प्रचलितः। आचार्य उमास्वामिना-तत्त्वार्थसूत्रे उक्तं - गुणपर्ययवद् द्रव्यम्। उत्पाद-व्यय-ध्रौव्ययुक्तं सत्। सत् द्रव्यलक्षणम्।[1]

भगवान् महावीरः तथा उत्तरवर्तिनः जैनाचार्याः सम्पूर्णलोकं षड्द्रव्यात्मकं इति कथितवन्तः, एतदर्थं आचार्येभ्यः तथा अन्यग्रन्थेभ्यः द्रव्यम्, तत्त्वम्, पदार्थ एवं सत् एतेषां चतुर्णां शब्दानां प्रयोगः उपलब्धोऽस्ति, वस्तुतः चत्वारः शब्दाः एकार्थवाचकाः सन्ति, यत्र द्रव्यशब्दस्य प्रयोगः कृतः तत्र तस्मात् पूर्वं संख्या-वाचकः षड्शब्दस्य प्रयोगः कृतः।

**द्रव्यं द्विविधम्**

द्रव्यं मुख्यरुपेण द्विविधं- जीवः अजीवश्च। जीवस्यापि द्वौ भेदौ भवतः - त्रसः तथा स्थावरः। त्रसनामकस्य उदयेन जीवः त्रसः जीवः तथा स्थावरनामकस्य उदयेन स्थावरः जीवः कथ्यते। त्रसस्थावरयोः भेदयोः संसारी संसारि जीवानां समग्रभावेन समावेषः भवति। संसारी जीवः एतयोः द्वयोः भेदयोः बहिः न सन्ति। द्वीन्द्रियजीवादारभ्य अयोगकेवली पर्यन्तं सर्वे जीवाः त्रसजीवाः सन्ति। त्रसाः श्रेष्ठाः सन्ति। यतः एषां सर्वेषाम् उपयोगानां सद्भावः सम्भवः अस्ति। अजीवः पंचविधः- पुद्गलधर्माधर्माकाशकालश्च ।

**कालस्य स्वरूपम्**

जैनदर्शने कालोऽमूर्तः वर्णगन्धरसस्पर्शविरहितश्च मन्यते।[2] कालद्रव्यस्य प्रदेशप्रचयत्वं नस्वीक्रियते। लोकाकाशस्य प्रतिप्रदेशं कालाणवः स्थिताः सन्ति। तेषु स्निग्धरूक्षगुणाभावात् रत्नराशिरिव तेषां कालाणूनां बन्धो न भवति। एते निरंशा निष्क्रियाश्च भवन्ति।[3]

कालोऽनन्तसमयस्वरूपो भवति। यथा चोक्तं तत्त्वार्थसूत्रे – 'सोऽनन्तसमयः।'[4] समयः कालस्य सूक्ष्मतमं स्वरूपम्। तत्रैक एव वर्तमानसमयः, किन्त्वतीतानागतयोस्त्वानन्त्यम्। विद्यानन्दिस्वामी पर्यायतो व्यवहारतश्च कालमनन्तसमयकं द्रव्यतश्च लोकाकाशप्रदेशपरिमाणकं ब्रवीति –

**सोऽनन्तसमयः प्रोक्तो भावतो व्यवहारतश्च।**
**द्रव्यतो जगदाकाशप्रदेशपरिमाणकः।।**[5]

पर्यायतः कालोऽनन्तसमयोऽनन्तपर्यायवर्तनाहेतुत्वात्। एकैको कालाणुरनन्तपर्यायान् वर्तयते प्रतिक्षणं शक्तिभेदात्। अनन्तशक्तिः सन् व्यवहारतः कालोऽनन्तसमयोऽभिधीयते समयस्य व्यवहारकालत्वादावलिकादिवत्। द्रव्यतस्तु लोकाकाशप्रदेशपरिमाणकोऽसंख्येय एव कालो, न पुनरेक एवाकाशादिवत् नाप्यनन्तः।[6] कालो हि लोकाकाशस्य बहिर्न भवति। जैनागमेषु अद्धासमयस्वरूपस्य कालस्य व्यवहारो मनुष्यक्षेत्रे सार्द्धद्विद्वीपस्वरूप एव प्रतिपाद्यते।[7]

**कालविभागः**

कालस्य विभागेनैव आयुष्मादयः मिम्यन्ते। सः एतत्प्रकारमस्ति – अविभाज्य–कालस्य नाम समयः अस्ति समयं ज्ञातुं शास्त्रेषु अनेकानि उदाहरणानि उपलब्धानि सन्ति। एकः शक्तिशाली युवकः एकं जीर्णं तन्तुं यावतिकाले त्रोटयति तस्य असंख्यातस्य भागस्य नाम समयः अस्ति। चक्षुषः उन्मेषे यः कालः व्यतीतः भवति तस्य असंख्यातस्य भागस्य नाम समयः अस्ति। विद्युतः प्रवाहः अत्यल्पकाले एव लक्षक्रोशं पर्यन्तं याति तथा अतिसूक्ष्मकाले यावत् क्षेत्रस्य अवगाहनं करोति यदि तस्य क्षेत्रस्य विभागः क्रियते, तदा तत् क्षेत्रम् असंख्यरूपम् भविष्यति। सः असंख्यातरूपः भागः समयः निगद्यते। एतेषां उदाहरणानां आधारमाश्रित्य समयस्य सूक्ष्मतायाम् अनुमन्यते। यः परिणमनस्य हेतुरस्ति सः कालः लोके परलोके अपि भवति सैव कालः निश्चय–कालः एव निगद्यते। तथा मुहूर्तः – अहोरात्रादयः विभागरूपः कालः केवलं मनुष्यलोके एव भवति मनुष्यलोकस्य बहिर्नास्ति तस्याधारः सूर्यचन्द्रमसोः गतिः अस्ति। यः कालः गणनया ज्ञायते सः संख्येयः कालः अस्ति। यः गणनया न ज्ञायते केवलं उपमया अनुमानेन वा गणयितुं शक्यते सः असंख्येयः कालः विद्यते, यथा पल्योपमः। यस्य कालस्य अन्तो नास्ति सः अनन्तः कालः अस्ति।

**जैनदर्शने कालस्य द्रव्यत्वे मतद्वयम्**

जैनदर्शने कालस्य द्रव्यत्वमधिकृत्य दार्शनिकाः न सन्त्येकमताः। तत्त्वार्थसूत्रे उमास्वातिना उमास्वामिना वा कालश्चेत्येकेन[8] सूत्रेण मतभेदस्य संकेतः प्रदत्तः। जैनदर्शने धर्माधर्माकाशजीवपुद्गलैरिव केचन दार्शनिकाः कालमपि षष्ठं द्रव्यं मन्यन्ते। दिगम्बरपरम्परायान्तु निर्विवादरूपेण कालस्य द्रव्यत्वम् स्वीकृतम्, किन्तु श्वेताम्बरपरम्परायां मतद्वयं दृश्यते। केचन कालस्य द्रव्यत्वं नास्वीकुर्वन्ति, अन्ये च स्वीकुर्वन्ति। मतद्वयस्योल्लेखो जिनभद्रगणिक्षमाश्रमणस्य विशेषावश्यकभाष्ये, हरिभद्रसूरेः धर्मसंग्रहणौ, उपाध्यायविनयविजयस्य लोकप्रकाशे चाप्युलभ्यते।[9]

कालस्य पृथग्द्रव्यताऽस्वीकारे तर्काः ये कालस्य पृथग्द्रव्यत्वं न स्वीकुर्वन्ति ते कथयन्ति यत् धर्मास्तिकायादिद्रव्याणां पर्याय एव कालोऽस्ति, तस्य पृथगस्तित्त्वं न सिध्यति।

कालस्य पृथक् द्रव्यत्वं न भवति इत्यस्य पुष्टौ लोकप्रकाशकारः उपाध्यायविनयविजयः निरूपयति -

अत्र द्रव्याभेदवर्ति-वर्तनादिविवक्षया। कालोऽपि वर्तनाद्यात्मा जीवाजीवतयोदितः।

वर्तनाद्याश्च पर्याया एवेति प्राग् विनिश्चितं। तद्वर्तनादिसम्पन्नः कालो द्रव्यं भवेत्कथम्।। पर्यायाणां हि द्रव्यत्वेऽनवस्थापि प्रसज्यते। पर्यायरूपस्तत्कालः पृथग् द्रव्यं न सम्भवेत्।।[10] वर्तमानादिपर्यायरूपः कालः जीवाजीवस्वरूपः द्रव्यतोऽभिन्नश्च भवति। वर्तनादिसम्पन्नः कालः पृथक् द्रव्यं भवितुं नार्हति, यतोहि यदि द्रव्यस्य पर्याया एव पृथक् द्रव्यरूपेण स्वीक्रियन्ते तदाऽनवस्था दोषः प्रसज्यते। कालश्च द्रव्याणां पर्यायरूपोऽतोऽसौ पृथग्द्रव्यं भवितुं नार्हति। इत्थं केचन जैनाचार्या कालस्य पृथग्द्रव्यत्वमनस्वीकृत्य प्रतिपक्षं विखण्डयन्ति।

**कालस्य पृथग्द्रव्यतासिद्धिः**

कालस्य पृथग्द्रव्यत्वमपि जैनाचार्याः साधयन्ति। दिगम्बरपरम्परायां तु निर्विवादरूपेणाऽस्य पृथग्द्रव्यत्वं स्वीक्रियते एव, किन्तु श्वेताम्बरपरम्परायामपि कालस्य स्वतन्त्रद्रव्यत्वमुररीक्रियते। आगमवाङ्मयेऽपि षड्द्रव्येषु कालस्य गणना क्रियते। उत्तराध्ययनसूत्रे, अनुयोगद्वारसूत्रे च षड्द्रव्याणि निरूपितानि।[11] यथा -

1.धर्मास्तिकायः 2.अधर्मास्तिकायः 3.आकाशास्तिकायः 4.जीवास्तिकायः 5.पुद्गलास्तिकायः 6.कालः (अद्धासमयः)

आगमेषु द्रव्याणि षडेवोच्यन्ते, अस्तिकायाश्च पंच। कुत्रापि द्रव्याणि पंचेति नोक्तानि। अनेनागमसन्दर्भेणैव सिध्यति यत् कालोऽपि पृथग्द्रव्यं वर्तते एव। कालस्य पृथग्द्रव्यतासिद्धौ आचार्यविद्यानन्दिना मलयगिरिसूरिणा उपाध्यायविनयविजयेन चानेके तर्काः प्रस्तुताः। द्रव्यस्य

लक्षणं तत्त्वार्थसूत्रे इत्थं प्रदत्तम् – '**गुणपर्ययवद् द्रव्यम्**'[12] अर्थात् द्रव्यं गुणयुक्तं पर्याययुक्तं च भवति। कालोऽपि तथैव गुणयुक्तः पर्याययुक्तश्च मन्यते। आचार्यविद्यानन्दः तत्त्वार्थश्लोकवार्तिके कालद्रव्यस्य लक्षणं साधयन्निगदति यत् कालद्रव्ये सामान्यतः संयोगविभागसंख्यापरिमाणादयः गुणा विशेषरूपेण च सूक्ष्मत्वामूर्तत्वागुरुलघुत्वैकप्रदेशत्वादयः गुणाः भवन्ति। पदार्थानां क्रमेण वर्तनादयः पर्यायाः कालस्य प्रसिद्धाः सन्ति। इत्थं गुणपर्ययवद् द्रव्यम् इति लक्षणं कालेऽपि सिध्यति। यथाचोक्तम् –

**निःशेषद्रव्यसंयोगविभागादिगुणाश्रयः।**
**कालः सामान्यतः सिद्धः सूक्ष्मत्वाद्यान्योभिधा।।**
**क्रमवृत्तिपदार्थानां वृत्तिकरणतादयः।**
**पर्यायाः सन्ति कालस्य गुणपर्यायवानतः।।**[13]

प्रश्नः समुदेति यदलोकाकाशे कालद्रव्यं भवत्यतस्तत्र पर्यायपरिवर्तनं कथं भविष्यति? अस्य प्रश्नस्य आचार्यः विद्यानन्दिना उत्तरं दीयते यदाकाशद्रव्यस्यालोकाकाशः लोकाकाश्च औपचारिकभेदौ भवतः। लोकाकाशे कालद्रव्यस्य निमित्तेन यत् पर्याय–परिवर्तनं भवति तत् सम्पूर्ण–आकाशद्रव्यस्य भवति। इत्थं लोकाकाशेन सहाऽलोकाकाशस्यापि पर्यायपरिवर्तनं जायते।[14]

**कालस्यानस्तिकायत्वम्**

'अस्तिकायः' इति जैनदर्शनस्य विशिष्टः शब्दः। यः अस्तिकायो भवति तद् द्रव्यमपि भवति, किन्तु यद् द्रव्यं भवति तदस्तिकायोऽपि भवेदिति नास्त्यावश्यकम्। एतदेव कारणं यत् जैनदर्शने कालो द्रव्यं भूत्वाऽपि अस्तिकायो नास्ति। लोकस्य स्वरूपं जैनागमेषु अस्तिकायरूपेणाऽपि व्याख्यातं द्रव्यरूपेणाऽपि च व्याख्यातम्। अस्तिकायाः पंच भवन्ति[15] 1. धर्मास्तिकायः, 2. अधर्मास्तिकायः, 3. आकाशास्तिकायः, 4. जीवास्तिकायः, 5. पुद्गलास्तिकायश्च। लोकः पंचास्तिकायात्मकः मतः, यथा चोक्तं व्याख्याप्रज्ञप्तिसूत्रे – **किमियं भंते! लोएत्ति पवुच्चई? गोयमा पंचत्थिकाया।**[16] अत्रेदं ध्यातव्यं यदस्तिकायतो द्रव्यं भिद्यते।

अस्तिकायद्रव्ययोर्भेदः

अस्तिकायाः सन्ति पंच, द्रव्याणि तु कालेन सार्धं षड् भवन्ति। कोऽस्त्येतयोर्भेद इति विचारणीयम्–

1. 'अस्तीत्ययं त्रिकालवचनो निपातः, अभूवन् भवन्ति भविष्यन्ति चेति भावना। अतोऽस्ति च ते प्रदेशानां कायाश्च राशय इति अस्तिकायाः।'[17] अस्य तात्पर्यमस्ति यत् यः कायः राशिर्वा

कालत्रये भवति स अस्तिकायः इत्युच्यते। धर्माधर्माकाशजीवपुद्गलाः प्रत्येकं कालत्रये राशिरूपेण भवन्ति। कालोऽराशिस्वरूपो भवति अतोऽनस्तिकायः।[18]

2. अस्तिशब्देन प्रदेशप्रदेशाः क्वचिदुच्यन्ते, ततश्च तेषां वा कायाः अस्तिकायाः।

अस्ति इत्यस्य प्रदेशः इत्यर्थोऽपि भवति। इत्थं प्रदेशानां समूह एव अस्तिकायः कथ्यते। (प्रदेशोऽत्र अस्तिकायस्य सूक्ष्मतमो काल्पनिको भागो भवति) काले नास्ति प्रदेशप्रचयः। प्रदेशप्रचयाऽभावे कालस्यानस्तिकायत्वं सिध्यति।

व्याख्याप्रज्ञप्तिसूत्रे धर्मास्तिकायवत् अधर्मास्तिकायस्य, आकाशास्तिकायस्य, जीवास्तिकायस्य पुद्गलास्तिकायस्य चापि अखण्डस्वरूपे अस्तिकायत्वं स्वीक्रियते। अस्य तात्पर्यमस्ति यत् यथा धर्मास्तिकाये निरवशेष-असंख्यातप्रदेशानां ग्रहणं भवति तदभावे तस्यास्तिकायत्वं न सिध्यति, तथैवाऽधर्मास्तिकायादीनामपि स्व-निरवशेष-प्रदेशानां तस्मिन् तस्मिन्नस्तिकाये ग्रहणं जायते।

अस्तिकायस्य द्रव्यादयमेव भेदो यद् अस्तिकाये धर्मास्तिकायादीनामखण्ड-निरवशेषस्वरूपस्य ग्रहणं भवति तत्र द्रव्ये धर्मादीनां स्कन्धस्य अंशस्य वाऽपि ग्रहणं जायते। यदा समस्तपुद्गलद्रव्याणामखण्डरूपेण ग्रहणं भविष्यति तदाऽसौ पुद्गलास्तिकायः इति वक्ष्यते। तस्यांशरूपाणि पुस्तक-भवन-कलम-आसन्दिकादीनि पुद्गलद्रव्याणि निगदिष्यन्ते। पुस्तकादीनि द्रव्याणि तु सन्ति, किन्तु न पुद्गलास्तिकायाः। इत्थमेव जीवास्तिकाये समस्तजीवानां ग्रहणं भवति, किन्तु पृथग्रूपेण एकोऽपि जीवो जीवद्रव्यं वक्तुं शक्यते। अस्तिकायस्य द्रव्यादयं सूक्ष्मो भेद आगमेषु वर्णितोऽस्ति। कालो द्रव्यं तु स्वीकृतं, किन्तु तस्य न किमपि अखण्डस्वरूपं, न च तस्मिन् प्रदेशानां प्रचयः, अतोऽसौ नास्त्यस्तिकायः।

अत्र प्रश्नः भवति - यदा कालः वास्तविकं द्रव्यं नास्ति तदा पुनः तस्य कल्पना कथम्? तथा तस्य कालस्य अनन्तानि द्रव्याणि कथम्? तस्य समाधानमस्ति यत्कालस्य परमाणवः तथा प्रदेशाः न भवन्ति तदेव काल्पनिकं द्रव्यम् कथ्यते। कालस्य उपयोगिता स्वयं सिद्धाऽस्ति, यतः ताम् विना कोऽपि कार्यक्रमः निर्धारितो न भवति। लघुभ्यः कार्येभ्यः आरभ्य महत्कार्यपर्यन्तं कालस्य सहायता अपेक्षिता भवति, सर्वाणि कार्याणि भूत-वर्तमान-भविष्यतादि ये कालाः सन्ति। तेषु कालेषु भवन्ति। कालं विना किमपि कार्यं न भवति कालस्य इयम् उपयोगिता प्रत्यक्षतः प्रमाणिता अस्ति। कालात् परमं सूक्ष्म-भागस्य नाम समयः अस्ति। एतादृशः अनन्तसमयः भूतकाले व्यतीतः। वर्तमाने एतादृशः एकः समयः वर्तते आगामिकाले एतादृशाः अनन्तसमयाः भविष्यन्ति अतः कालः द्रव्यदृष्ट्या अनन्ताव्यक्तिरूपाम् मन्यते। कालः जीवाः पुद्गलाः ये अनन्ताः सन्ति तेष्वुपरि वर्तते अतः

सः अनन्तं द्रव्यं कथ्यते। कालस्य अनादित्वं तथा अनन्तत्त्वं लोकस्य स्थितावुपरि निर्भरमस्ति, यद्यपि लोकस्य स्थितिः अनादिरूपा अनन्तरूपा च अस्ति अतः कालस्य अनादिरूपत्वं तथानन्तरूपत्वम् अनिवार्यमस्ति।

**षड्द्रव्येषु कालस्य सर्वातिशायिता**

षड्द्रव्येषु धर्मास्तिकायोऽधर्मास्तिकायः आकाशास्तिकायश्च द्रव्यदृष्ट्या तुल्याः षड्द्रव्येषु च सर्वतोऽल्पाः। ततो जीवास्तिकायो द्रव्यदृष्ट्याऽनन्तगुणः ततोऽपि पुद्गलास्तिकायः द्रव्यदृष्ट्याऽनन्तगुणः, ततोऽपि अद्धासमयः (कालः द्रव्यदृष्ट्या) अनन्तगुणो वर्तते।[19] संख्याया एतन्निर्देशः स्पष्टयति यद् अस्तिकाय-द्रव्ययोरस्ति भिन्नता। प्रथमानि त्रीणि द्रव्याणि एकैकानि सन्ति। जीवास्तिकाये तु प्रत्येकं जीवः एकं पृथग्द्रव्यमस्त्यतोऽसौ अनन्तगुणो निगदितः। पुद्गलास्तिकायस्तु द्रव्यदृष्ट्या जीवास्तिकायतोऽप्यनन्तगुणः प्रतिपादितः। यतोहि स्कन्धरूपेण परमाणुरूपेण च पुद्गला अनन्ता सन्ति। कालस्तु ततोऽप्यनन्तगुणोऽस्ति यतोहि कालाणवोऽनन्त-समयात्मकाः सन्ति।

**वर्तनापरिणामाद्युपग्रहैरपि कालस्य सिद्धिः**

तत्त्वार्थसूत्रे कालस्योपग्रहाः कार्याणि वेत्थं प्रतिपादितानि – 'वर्तना परिणामः क्रिया परत्वापरत्वे च कालस्य।'[20] धर्मास्तिकायादीनां द्रव्याणां वर्तनायां कालोऽस्ति निमित्त-कारणम्। वर्तते वर्तनमात्रं वा वर्तना, वृतेर्ण्यन्तात्कर्मणि भावे वा युक् तस्यानुदात्तत्वाद्वा ताच्छीलिको वा युच् वर्तनाशीला वर्तनेति।[21] तत्त्वार्थवार्तिके भट्टाकलंकः श्लोकवार्तिके च आचार्यविद्यानन्दिस्वामी वर्तनायाः स्वरूपं स्पष्टयति – **'प्रतिद्रव्यपर्यायमन्तर्नीतैकसमया स्वसत्तानुभूतिर्वर्तना। द्रव्यस्य पर्यायो द्रव्यपर्यायः द्रव्यपर्यायं द्रव्यपर्यायं प्रति प्रतिद्रव्यपर्यायं अन्तर्नीत एकः समयोऽनयेत्यन्तर्नीतैकसमया। का पुनरसौ स्वसत्तानुभूतिः? स्वस्यैव सत्ता स्वसत्ता अन्यासाधारणी उत्पादव्ययध्रौव्यैक्यवृत्तिरित्यर्थः। 'उत्पाद-व्यय-ध्रौव्ययुक्तं सत् इति वचनात्।'**[22] यदि वर्तनाया प्रत्यक्षं न प्रसिद्धं तर्हि अनुमानेनापि सा ज्ञायते –

**प्रत्यक्षतोऽप्रसिद्धापि वर्तनाऽस्मादृशा तथा।**
**व्यावहारिककार्यस्य दर्शनोदनुमीयते।।**[23]

जीवपुद्गलधर्माधर्माकाशानां वर्तना बहिरस्वीकारणमपेक्षन्ते। तेषां वर्तनायाः यद्बहिरस्वीकारणं सः कालः। न हि कालाणवः स्वसत्तानुभूतौ प्रयोजकमपरमपेक्षन्ते।[24] यदि कालस्य वर्तनायामन्यं निमित्तं मन्येत तर्ह्यनवस्थादोषः प्रसज्येत। वर्तनास्वरूपं कार्यं यदि धर्माधर्माकाशपुद्गलजीवानामेव मन्येत तर्ह्युपादानकारणानां भिन्नतया एकविधं वर्तनाकार्यं न

सम्भवम्। भिन्नान्युपादानकारणानि भिन्नानि कार्याणि जनयन्ति नैकविधं कार्यम्। अत एतेषां वर्तनास्वरूपैककार्ये कालोऽस्ति निमित्तं कारणम्।[25] यदि कश्चित् मन्येत यत् आकाशमेव वर्तनाया कारणं भविष्यति तर्हि भट्ट-अकलंकेन तत्त्वार्थवार्तिके कालस्य सिद्धिं कुर्वतोक्तम् यत् यथा भाण्डं तण्डुलानामाधारो भवति, किन्तु पाकायाग्नेर्व्यापार इष्यते तथैव आकाशं वर्तनाशीलद्रव्याणामाधारो भवितुं शक्नोति, किन्तु स वर्तनाया उत्पत्तौ सहकारि भवितुमर्हति। तस्मिन् तु कालद्रव्यस्यैव व्यापार इष्यते। यथा जीवाः पुद्गलाश्च स्वयमेव गतिं कुर्वन्ति स्वयमेव च स्थिरा भवन्ति, किन्तु गतौ धर्मास्तिकायः स्थितौ चाऽधर्मास्तिकायो निमित्तं भवति तथैव जीवाजीवद्रव्याणां पर्यायपरिणमने वर्तनायाञ्च निमित्तं कालद्रव्यं भवति।[26]

द्रव्यस्य स्वजात्यपरित्यागेन प्रयोगविस्रसालक्षणो विकारः परिणामः। धर्मास्तिकायादीनि द्रव्याणि आत्मनः स्वरूपमपरित्यज्य पर्यायपरिवर्तनं कुर्वन्ति तदाऽसौ 'परिणामः' उच्यते। अस्मिन् परिणमनेऽपि कालद्रव्यस्योपकारो भवति। परिणामोऽसौ विसस्राप्रयोगाभ्यां द्विप्रकारकः। तत्र विस्रसापरिणामः स्वतो जायते, प्रयोगपरिणामश्च पुरुषप्रयोगापेक्षो भवति। देशान्तरप्राप्तिहेतुः परिस्पन्दात्मको पर्याय एव क्रिया।

यथा चोक्तम् तत्त्वार्थश्लोकवार्त्तिके -

**परिस्पन्दात्मको द्रव्यपर्यायः सम्प्रतीयते।**
**क्रियादेशान्तरप्राप्तिहेतुर्गत्यादिभेदभृत्।।**[27]

एषा क्रिया पदार्थानामन्यदेशप्राप्तौ कारणं, गमनभ्रमणाकुंचनादिभेदानपि धारयति। तत्त्वार्थवार्तिके प्रयोगविस्रसाभेदेन क्रियायाः द्वैविध्यं प्रतिपादितम्। प्रायोगिकी क्रिया शकटादिषु, विस्रसानिमित्ता च मेघादीनां दृश्यते।[28]

परत्वापरत्वे क्षेत्रप्रशंसाकालकृते भवतः, किन्त्वत्र कालकृते परत्वापरत्वे एवाभीष्टे। कालापेक्षया पूर्वभावि परं पश्चाद्भावि चापरमित्युच्यते। रामदशरथयोः रामस्यापरत्वं दशरथस्य च परत्वं कालस्यैव कार्यम्। इत्थं ज्येष्ठकनिष्ठयोः व्यवहारः कालस्यैवोपकारः प्रतीयते।[29] कालस्यैतैः कार्यैरपि तस्य पृथग्द्रव्यता सिद्धिमाप्नोति।

इत्थं जैनदर्शने कालस्य द्रव्यत्वमपि सिद्धयति, अनस्तिकायत्वमपि च। काले 'गुणपर्ययवद् द्रव्यमिति' लक्षणस्य सिद्धेः कालस्य द्रव्यत्वमस्ति स्पष्टमेव। कालस्यानस्तिकायत्वमप्यस्त्येव यतोह्यसौ प्रदेशप्रचयत्वाऽखण्डस्वरूपादिलक्षणैर्विरहितो मन्यते।

**सन्दर्भाः -**

1. तत्त्वार्थसूत्रम् 5
2. रूपादिगुणविरहादमूर्ताः। - सर्वार्थसिद्धिः 5,39
3. लोकाकाशस्य यावन्तः प्रदेशास्तावन्तः कालाणवः निष्क्रियाः एकैकाकाशप्रदेशे एकैकवृत्त्या लोकं व्याप्य व्यवस्थिताः। उक्तं च द्रव्यसंग्रहे-
   लोगागासपदेसे एक्केक्के जे ट्ठिया हु एक्कक्का।
   रयणाणं रासीविव ते कालाणू मुणेयव्वा।।
   ववगदपणवण्णरसो ववगदो गंध अट्ठफासा य।
   अगुरुलहुगो अमुत्तो वट्टणलक्खो य कालोत्ति।।
4. तत्त्वार्थसूत्रम् 5.40
5. तत्त्वार्थश्लोकवार्तिकम्, 5.40
6. द्रष्टव्यम्, तत्त्वार्थश्लोकवार्तिकम्, 5.40
7. सार्द्ध द्वीपद्वयं वार्द्धि-युगं च व्याप्य स स्थितः।
   त्रिः पंचदशभिर्लक्षैर्योजनानि मतस्ततः।। -लोकप्रकाशः 28.77
8. तत्त्वार्थसूत्रम् 5.38
9. अन्यत्राप्युल्लेखः प्राप्यते, द्रष्टव्यं पण्डितसुखलालसंघविनः 'दर्शन और चिन्तन', पृ0 331
10. लोकप्रकाशः, 28. 3-15
11. धम्मे अहम्मो आगासां कालो पुग्गल जंतवो। एस लोगो त्ति पण्णत्तो, जिणेहिं वरदंसीहि।। - उत्तराध्ययनसूत्रम् 28.7,
    दव्वणामे छव्विहे पण्णत्ते, तंजहा - धम्मत्थिकाए, अधम्मत्थिकाए आगासत्थिकाए, जीवत्थिकाए, पोग्गलत्थिकाए, अद्धासमए य। - अनुयोगद्वारसूत्रम्, 218,
    गोयमा! छव्विहा दव्वा पण्णत्ता तंजहा - धम्मत्थिकाए, अधम्मत्थिकाए पुग्गलत्थिकाए, जीवत्थिकाए,अद्धासमए य। - व्याख्याप्रज्ञप्तिसूत्रम्
12. तत्त्वार्थसूत्रम् 5.37
13. तत्त्वार्थश्लोकवार्तिकम्, 5.39-23
14. लोकाद्बहिरभावे स्याल्लोकाकाशस्य वर्तनं ।
    तस्यैकद्रव्यता सिद्धेर्युक्तं कालोपपादितं।। - तत्त्वार्थश्लोकवार्तिकम् 5.40.2
15. गोयमा! पंच अत्थिकाया पण्णत्ता, तं जहा - धम्मत्थिकाए, अधम्मत्थिकाए अगत्थिकाए, जीवत्थिकाए, पोग्गलत्थिकाए। - व्याख्याप्रज्ञप्तिसूत्रम्, शतकं 2,

उद्देशकः 10, सूत्र-1

16. व्याख्याप्रज्ञप्तिसूत्रम्, 13.4.481
17. अभयदेवसूरिः, अभिधानराजेन्द्रकोषे
18. तत्रैव
19. गोयमा! धम्मत्थिकाए, अधम्मत्थिकाए आगासत्थिकाए य एए तिण्णि वि तुल्ला दव्वट्ठयाए सव्वत्थो वा।
    जीवत्थिकाए, दव्वट्ठयाए अणंतगुणे, पोग्गलत्थिकाए दव्वट्ठयाए, अणंतगुणे अद्धासमए दव्वट्ठायाए अणंतगुणे। प्रज्ञापनसूत्रे पदतृतीयं सूत्रम् - 270
20. तत्त्वार्थसूत्रम् 5.22
21. तत्त्वार्थश्लोकवार्तिकम् 5.22
22. तत्त्वार्थवार्तिकम्, 5.22, तत्त्वार्थश्लोकवार्तिकम्, 5.22
23. तत्त्वार्थश्लोकवार्तिकम्, 5.22.6
24. यत्तावद् बहिरंगकारणं स कालः न हि कालाणवः स्वसत्तानुभूतौ प्रयोजकमपरमपेक्षन्ते।
    - तत्त्वार्थश्लोकवार्तिकम् 5.22, पृष्ठ 414
25. तत्त्वार्थश्लोकवार्तिकम्, 5.22
26. तत्त्वार्थवार्तिकम्, 5.22.8
27. तत्त्वार्थश्लोकवार्तिकम्, 5.22.39
28. तत्त्वार्थवार्तिकम्, 5.22.19
29. तत्त्वार्थवार्तिकम्, 5,22,20 तदुपरि तत्त्वार्थश्लोकवार्तिकं च।

# कुन्दकुन्दाचार्यकृतद्रव्यविवेचनम्
## (पञ्चास्तिकायग्रन्थविशेषे)

**श्री प्रतापः**
अध्यक्षः – जैनदर्शनविभागः
राष्ट्रियसंस्कृतसंस्थानम्, भोपालपरिसरः

जगत्यस्मिन् नैके आचार्याः ग्रन्थकाराः विद्वांसः च प्रादुर्भूताः। सर्वेषां स्वस्वविशिष्टस्थानं राजते। तत्र मार्त्तण्डसदृशो भासते कुन्दकुन्दाचार्यः। विद्वन्मण्डले स्वीकृतः पर्याप्तचर्चा कृतः आचार्यस्य समयः विक्रमस्य प्रथमशती। कुन्दकुन्दाचार्यप्रभृतिः ये आचार्याः अभूवन् ते गौरवमनुभूतवन्तः यत् ते कुन्दकुन्दाचार्यस्य परम्परायाम् अभूवन्। वक्तुं शक्यते इदं यत् यथा गजस्य पादे सर्वपशूनां पादाः समाहिताः भवन्ति तथैव कुन्दकुन्दाचार्ये अपि तस्मात् परं समग्राचार्यपरम्परा समाहिता भवति। यथोक्तम् –

**मङ्गलं भगवान् वीरो मङ्गलं गौतमो गणी।**
**मङ्गलं कुन्दकुन्दाद्यो जैनधर्मोऽस्तु मङ्गलम्।।**

कुन्दकुन्दाचार्यस्य विषये कविवरवृन्दावनदासेन उक्तम् –

**हुए हैं न होहिंगे, मुनिन्द कुन्दकुन्द से।।**

कुन्दकुन्दाचार्यः चारणऋद्धिधारकः आसीत् यस्मात् सः चतुरङ्गुलाकाशे गमनं करोति स्म। आचार्यस्य पञ्चनामानि प्रसिद्धानि वर्तन्ते, यथा–

**श्रीमूलसंघेननि नंदिसंघ (स्त)स्मिन् बलत्कारगणोतिरम्य।**
**तत्रापि सारस्वतनाम्नि गच्छे स्वच्छाशयोऽभूदिह पद्मनंदी।।**
**आचार्य्या कुंड (कुंदा) ख्यो वक्रग्रीवो महामति।**
**एलाचार्यो गृध्रापितच्छ इति तन्नाम पञ्चधा।।**[1]

अत्र कुन्दकुन्दः, वक्रग्रीवः, महामतिः, एलाचार्यः, गृद्धपिच्छ चेति पञ्चनामानि प्राप्तानि आचार्यस्य। अत्र 'पद्मनन्दिः' इति नामस्थाने 'महामतिः' नाम प्राप्तम्।

कुन्दकुन्दाचार्यस्य जीवनं शास्त्ररचनार्थं समर्पितम् आसीत्। आचार्यस्य प्रमुखपञ्चकृतयः अद्य समुपलब्धाः विद्यन्ते, सन्ति च ताः –

1. समयसारः, 2. प्रवचनसारः, 3. नियमसारः, 4. पञ्चास्तिकायः, 5. अष्टपाहुड।

आचार्यस्य इमे सर्वे ग्रन्थाः शौरसेनी प्राकृतभाषायां निबद्धाः वर्तन्ते। शैली च

गाथात्मिका वर्तते। कुन्दकुन्दाचार्येण जैनदर्शनस्य प्रमुखसैद्धान्तिकविषयाः गाम्भीर्येण जागरुकतया च सुप्रतिपादिताः। तत्र आचार्येण पञ्चास्तिकायग्रन्थविशेषे द्रव्यद्रव्यत्वद्रव्यभेदाश्च विशिष्टत्वेन प्रतिपादिताः सुसंस्थापिताः सर्वबोधगम्यकृताः तथा च द्रव्यलक्षणे अन्यमतकथितसदोषलक्षणस्य निराकरणं निरसनं वा कृत्वा निर्दोषद्रव्यलक्षणं सुप्रतिपादितम्।

'द्रव्यम्' शब्दोऽयं 'द्रु + यत्' इत्येवं निष्पन्नमभवत्।[2] यस्यार्थः पदार्थः, वस्तु, सामग्री वा वर्तते। 'द्रव्यम्' शब्दोऽयं जैनदर्शनस्य एकः विशिष्टः शब्दः विलसति। पूज्यपादाचार्येण प्रोक्तम् -

**यथास्वं पर्यायैर्द्रूयन्ते द्रवन्ति वा तानि इति द्रव्याणि।**[3]

अर्थात् 'द्रव्यम्' इत्यस्मिन् शब्दे 'द्रु' धातुः वर्तते, यस्यार्थः प्राप्तकरणं भवति। एतस्मात् द्रव्यशब्दस्य व्युत्पत्तिरूपार्थः एवं भवति यानि यथायोग्यं स्वस्वपर्यायैः प्राप्तानि भवन्ति उत वा पर्यायान् पाप्नुवन्ति, तानि द्रव्याणि उच्यन्ते। अकलङ्काचार्येणापि एवं प्रकारेणैव प्रोक्तम्-

**स्वपरप्रत्ययोत्पादविगमपर्यायैः द्रूयन्ते द्रवन्ति वा तानीति द्रव्याणि।**[4]

अर्थात् स्वपरप्रत्ययैः उत्पादव्ययरूपपर्यायैः यत् प्राप्तं भवति तथा च पर्यायान् यत् प्राप्नोति तद् द्रव्यम् इति।

अत्र 'पर' अस्यार्थः द्रव्यक्षेत्रकालभावरूपबाह्यप्रत्ययः वर्तते तथा स्वस्य स्वाभाविकशक्तिः स्वप्रत्ययः विद्यते। बाह्यप्रत्यये सत्यपि यदि द्रव्ये तस्य पर्यायस्य योग्यता सामर्थ्यं वा न विद्यते तर्हि पर्यायान्तरो उत्पन्नो न भवितुमर्हति। द्वयोः संयोगे सत्येव पर्यायः उत्पन्नः भवति, यथा- पक्तुं योग्यमाषाः गोण्यां सन्ति चेत् पाकः तु न भवितुम् अर्हति तथा च पक्तुम् अयोग्यमाषाः स्थाल्याम् अत्युवष्णे जले अपि तेषां पाकः न भवितुम् अर्हति। यदा पक्तुं योग्यमाषान् अत्युष्णे जले पातयेत् तदैव तेषां पाकः भवति।

तत्त्वार्थसूत्रग्रन्थे उमास्वामि-आचार्येण प्रोक्तम् -

**सद्द्रव्यलक्षणम्।।**[4]

**उत्पादव्ययध्रौव्ययुक्तं सत्।**[5]

द्रव्यस्य लक्षणं सत् वर्तते तच्च सत् उत्पादव्ययध्रौव्ययुक्तं भवति। चेतनस्याचेतनस्य वा द्रव्यस्य स्वां जातिमजहत उभयनिमित्तवशाद् भावान्तरावाप्तिरुत्पादनमुत्पादः। मृत्पिण्डस्य घटपर्यायवत्। तथा पूर्वभावविगमनं व्ययः। यथा घटोत्पत्तौ पिण्डाकृतेः। अनादिपारिणामिकस्वभावेन व्ययोदयाभावाद् ध्रुवति स्थिरी भवतीति ध्रुवः। ध्रुवस्य भावः कर्म वा ध्रौव्यम्। यथा मृतपिण्डघटाद्यवस्थासु मृदाद्यन्वयः।[6] पूज्यपादाचार्येण पुनः प्रोक्तम्-

**गुणसमुदायो द्रव्यम्।**[7]

उमास्वामी आचार्येण प्रोक्तम्–

**गुणपर्ययवद्द्रव्यम्।**[8]

गुणयुक्तं पर्याययुक्तञ्च द्रव्यं वर्तते इति। श्रीमता वादिराजसूरिणा न्यायविनिश्चियविवरणग्रन्थे उक्तम् –

**गुणपर्ययवद्द्रव्यं ते सहक्रमवृत्तयः।**
**विज्ञानव्यक्तिशक्त्याद्या भेदाभेदौ रसादिवत्।**[9]

अर्थात् गुणपर्याययुतं द्रव्यं भवति तथा च ते गुणपर्यायाः सहप्रवृत्तयः गुणाः क्रमप्रवृत्तयः पर्यायाः एवं भवन्ति। सहक्रमयोः द्रव्ये वृत्तिरात्मलाभपरिणतिः भवति। समन्तभद्राचार्येण आप्तमीमांसायां विलिखितम् –

**नयोपनयैकान्तानां त्रिकालानां समुच्चयः।**
**अविभ्राड्भावसम्बन्धो द्रव्यमेकमनेकधा।।**[10]

अर्थात् त्रिकालानां विषयकर्तृणां नयानाम् उपनयानां विषयभूतानाम् अनेकधर्माणां तादात्म्यसम्बन्धप्राप्तसमुदायस्य नाम द्रव्यं वर्तते। तच्च द्रव्यम् एकमप्यस्ति अनेकधा अपि विद्यते।

साम्प्रतं कुन्दकुन्दाचार्येण प्रतिपादितद्रव्यद्रव्यत्वद्रव्यभेदाश्च प्रतिपाद्यन्ते।

महता कुन्दकुन्दाचार्येण स्वशास्त्रेषु द्रव्यस्य अद्भुतं वर्णनं कृतम्। यथा पञ्चास्तिकायग्रन्थे प्रोक्तम् –

**सत्ता सव्वपयत्था सविस्सरूवा अणंतपज्जाया।**
**भंगुप्पादधुवत्ता सप्पडिवक्खा हवदि एक्का।।**[11]

द्रव्यस्य लक्षणं 'सत्' इति पूर्वाचार्यैः प्रोक्तमेव। तत्र 'सत्' 'सत्ता' वा समानार्थरूपपदद्वयं वर्तते। अस्याः सत्तायाः विषये एव कुन्दकुन्दाचार्येणात्र विलिखितं यत् सत्ता उत्पादव्ययध्रौव्यात्मिका एका सर्वपदार्थस्थिता सविश्वरूपा अनन्तपर्याया सप्रतिपक्षा चेति भवति। अत्र सत्ताद्रव्ययोः अर्थान्तरत्वं भिन्नपदार्थत्वम् अनन्यपदार्थत्वं वा न वर्तते। यथोक्तमाचार्येण –

**दवियदि गच्छदि ताइं ताइं सब्भावपज्जयाइं जं।**
**दवियं तं भण्णंते अणण्णभूदं तु सत्तादो।**[12]

अभिप्रायोऽयं वर्तते अत्र यत् तान् तान् सद्भावपर्यायान् द्रवति गच्छति वा तत् 'द्रव्यम्' इति भणन्ति सर्वज्ञाः तथा च तत् द्रव्यं सत्तातः अनन्यभूतमपि वर्तते। तत् द्रव्यम्

सत्, उत्पादव्ययध्रौव्यसंयुक्तं भवति, उत वा गुणपर्यायाश्रयं द्रव्यं भवति। यथोक्तम् -

**दव्वं सल्लखणियं उप्पादव्वयधुवत्तसंजुत्तं।**
**गुणपज्जयासयं वा जं तं भण्णंति सव्वण्हू।।**[13]

कुन्दकुन्दाचार्येण कथितं यत् द्रव्यार्थिकनयेन तु द्रव्यस्य उत्पत्तिः विनाशो वा न वर्तते। द्रव्यं केवलं सत् अस्ति। परन्तु पर्यायार्थिकनयेन तस्य एव द्रव्यस्य पर्यायाः विगमोत्पादध्रुवत्वं कुर्वन्ति। यथा -

**उप्पत्ती व विणासो दव्वस्स य णत्थि अत्थि सब्भावो।**
**विगमुप्पादधुवत्तं करेंति तस्सेव पज्जाया।।**[14]

अत्र द्वाभ्यां नयाभ्यां द्रव्यस्य लक्षणं विभक्तमाचार्येण। द्रव्यस्य पर्यायस्य च यदनन्यत्वं विद्यते तद् निरवद्यं निर्दोषं वा वर्तते अतः द्रव्ये पर्याये च अभेदः विद्यते। आचार्यकुन्दकुन्देन प्रोक्तम् -

**पज्जयविजुदं दव्वं दव्वविजुत्ता य पज्जया णत्थि।**
**दोण्हं अणण्णभूदं भावं समणा परुवेंति।।**[15]

अर्थात् पर्यायवियुतं द्रव्यं द्रव्यवियुक्ताश्च पर्यायाः न सन्ति। द्वयोः द्रव्यपर्याययोः अनन्यभूतं भावं श्रमणाः प्ररूपयन्ति। यथा दुग्धदधिनवनीतघृतरहितः गोरसः न भवति तथैव पर्यायरहितं द्रव्यमपि न भवति। द्रव्यगुणानाम् अनन्यत्वं वर्तते, इति सिद्धङ्कृतं कुन्दकुन्दाचार्येण यथा-

**दव्वेण विणा ण गुणा गुणेहिं दव्वं विणा ण संभवदि।**
**अव्वदिरित्तो भावो दव्वगुणाणं हवदि तम्हा।।**[16]

कथनस्य अभिप्रायोऽयं वर्तते यत् द्रव्येण विना गुणाः न भवन्ति। गुणैः विना च द्रव्यं न सम्भवति। तस्मात् द्रव्यगुणानाम् अव्यतिरिक्तभावः अभिन्नत्वं वा भवति। येन प्रकारेण स्पर्श-रस-गन्ध-वर्णाः पुद्गलात् भिन्नाः न भवन्ति तेन प्रकारेणैव द्रव्येण विना गुणाः अपि न भवन्ति। सर्वाणि द्रव्याणि अनेकान्तस्वरूपाणि अनेकान्तात्मकानि वा राजन्ते एतस्माद् तेषां सर्वद्रव्याणां कथनं स्याद्वादनयेनैव भवितुमर्हति। एतदेव कुन्दकुन्दाचार्येण पञ्चास्तिकाये स्पष्टी कृतम्, यथा -

**सिय अत्थि णत्थि उहयं अव्वत्तव्वं पुणो य तत्तिदयं।**
**दव्वं खु सत्तभंगं आदेसवसेण संभवदि।।**[17]

अर्थात् द्रव्यम् आदेशवशात् कथनवशाद्वा निश्चयेन स्यात् अस्ति, स्यात् नास्ति, स्यात् अस्ति नास्ति, स्यात् अवक्तव्यम्, स्यात् अस्ति अवक्तव्यम्, स्यात् नास्ति अवक्तव्यम्, स्यात्

अस्ति नास्ति अवक्तव्यम् चेत्येतानि सप्तभङ्गानि वर्तन्ते। एभिः सप्तभङ्गैः समीचीनं पूर्णञ्च ज्ञानं वस्तुनः भवति। यथा– द्रव्यं स्यादस्ति, द्रव्यं स्यात् नास्ति, द्रव्यं स्यात् अस्ति नास्ति, द्रव्यं स्यात् अवक्तव्यम्, द्रव्यं स्यात् अस्ति अवक्तव्यम्, द्रव्यं स्यात् नास्ति अवक्तव्यम्, द्रव्यं स्यात् अस्ति नास्ति अवक्तव्यं चेति। कथनस्य अपेक्षायाः विवक्षायाः वा महत्त्वमत्र विद्यते येन द्रव्यस्य स्पष्टं पूर्णञ्च ज्ञानं भवेत्। क्रमे अस्मिन् कुन्दकुन्दाचार्येण स्पष्टी कृतं यत् सत् द्रव्यं वा गुणपर्यायेषु उत्पादव्ययान् प्रकुर्वन्ति, यथा–

**भावस्स णत्थि णासो णत्थि अभावस्य चेव उप्पादो।**
**गुणपज्जएसु भावा उप्पादवए पकुव्वंति।।**[18]

अर्थात् भावस्य सतः द्रव्यस्य वा नाशः न भवति तथा च अभावस्य असतः अद्रव्यस्य वा उत्पादः न भवति अपितु भावाः सद्द्रव्याणि वा गुणपर्यायेषु उत्पादव्ययान् प्रकुर्वन्ति। अत्र उत्पादे असदोत्पत्तेः व्यये च सतः विनाशस्य निषेधः कृतः।

सत्तायाः द्रव्यस्य भावस्य वा स्वरूपं स्पष्टी कृत्वा साम्प्रतं तेषां षड्द्रव्याणां नामानि तथा च तेषु अस्तिकायत्वम् अनस्तिकायत्वञ्च प्रतिपाद्यते। जीवपुद्गलधर्माधर्माकाशकालाः एतानि षड्द्रव्याणि राजन्ते। मुख्यरूपेण तु द्रव्यद्वयमेव वर्तते– जीवद्रव्यम् अजीवद्रव्यञ्च। जीवद्रव्ये केवलम् 'आत्मा' समायाति तथा च अजीवद्रव्ये पुद्गल–धर्म–अधर्म–आकाश–कालश्च समायान्ति। पुनश्चात्र षड्द्रव्येषु पञ्चद्रव्याणि अस्तिकायरूपाणि सन्ति। अत्र अस्तिकायशब्दे 'काय' शब्दस्य विषये पूज्यपादाचार्येण सर्वार्थसिद्धौ विलिखितम् –

' 'काय' शब्दः शरीरे व्युत्पादितः। इहोपचाराादध्यारोप्यते। कुतः उपचारः ? यथा शरीरं पुद्गलद्रव्यप्रचयात्मकं तथा धर्मादिष्वपि प्रदेशप्रचयापेक्षया काया इव काया इति'[19]

एवं प्रकारेणैव नेमिचन्द्राचार्येण द्रव्यसंग्रहे कथितम् –

**संति जदो तेणेदे, अत्थित्ति भणंति जिणवरा जम्हा।**
**काया इव बुहदेसा, तम्हा काया य अत्थिकाया य।।**[20]

अर्थात् जीवपुद्गलधर्माधर्माकाशाः इमानि पञ्चद्रव्याणि विद्यमानानि सन्ति तस्मात् जिनवरैः भगवद्भिः 'अस्ति' इति प्रोक्तम्। यथा च काया इव बहुप्रदेशी वर्तते। अत एव अस्ति+काय – अस्तिकायः इति उच्यते। पञ्चसंख्याकारणात् अस्तिकाया इति सुप्रयोगः कृतः। कुन्दकुन्दाचार्येण पञ्चास्तिकायग्रन्थे विलिखितम् –

**जीवा पुग्गलकाया आयासं अत्थिकाइया सेसा।**
**अमया अत्थित्तमया कारणभूदा हि लोगस्स।।**[21]

जीवः, पुद्गलः, धर्मः, अधर्मः, आकाशश्च द्रव्याणि अकृतानि अस्तित्वमयानि च

सन्ति तथा च लोकस्य कारणभूतानि अपि वर्तन्ते, उच्यते च - षड्द्रव्यात्मकोऽयं लोकः इति। एतानि पञ्चद्रव्याणि प्रदेशसमूहमयाः बहुप्रदेशिनः वा सन्ति, अस्मात् कारणात् 'अस्तिकाया' इत्युच्यन्ते। तथा च कालद्रव्यम् एकप्रदेशी भवति अतः अस्तिकायः नास्तीति। अस्तित्वयुतानां जीवपुद्गलानां परिवर्तनसम्भूतः कालः निश्चयेन सर्वज्ञैः प्रज्ञप्तः इति प्रोक्तं कुन्दकुन्दाचार्येण-

**सब्भावसभावाणं जीवाणं तह य पोग्गलाणं च।**
**परियट्टणसंभूदो कालो णियमेण पण्णत्तो।।**[22]

साम्प्रतम् एतेषां षड्द्रव्याणां क्रमशः स्वरूपमवगच्छामः।

**1. जीवद्रव्यम् -**

जीवद्रव्यं अर्थात् आत्मद्रव्यं सर्वेषां दर्शनानां मूलं वर्तते। उमास्वामि-आचार्येण जीवस्य लक्षणं कृतम् -

**उपयोगो लक्षणम्।**[23]
**स द्विविधोऽष्टचतुर्भेदः।।**[24]

उपयोगः जीवस्य लक्षणं वर्तते। स च उपयोगः द्विविधः ज्ञानोपयोगः दर्शनोपयोगश्च। ज्ञानोपयोगः अष्टविधः - मतिज्ञानम्, श्रुतज्ञानम्, अवधिज्ञानम्, मनःपर्ययज्ञानम्, केवलज्ञानम्, कुमतिः, कुश्रुतम्, कु-अवधिज्ञानञ्चेति। दर्शनोपयोगः चतुर्विधः- चक्षुदर्शनम्, अचक्षुदर्शनम्, अवधिदर्शनम्, केवलदर्शनं चेति।[25]

कुन्दकुन्दाचार्येण जीवविषये विस्तृतं स्पष्टं महत्त्वपूर्णञ्च वर्णनङ्कृतम्। यथा-

**जीवो त्ति हवदि चेदा उवओगविसेसिदो पहू कत्ता।**
**भोत्ता य देहमेत्तो ण हि मुत्तो कम्मसंजुत्तो।।**[26]

अत्रोक्तं यत् जीवः चेतनः उपयोगविशेषः प्रभुः कर्त्ता भोक्ता देहमात्रः अमूर्त्तः कर्मसंयुक्तश्च भवति गृहीतविवक्षया। देहमात्रः अर्थात् शरीरप्रमाणम् इति। य आत्मा कर्ममलविप्रमुक्तः भवति सः ऊर्ध्वं लोकान्तम् अधिगम्य सर्वज्ञानदर्शी अनन्तम् अनिन्द्रियसुखं लभते। यथा-

**कम्ममलविप्पमुक्को उड्ढं लोगस्स अन्तमधिगंता।**
**सो सव्वणाणदरिसी लहदि सुहमणिंदियमणंतं।।**[27]

स च चैतन्यः आत्मा सर्वज्ञः सर्वलोकदर्शी स्वयं जातः स्वकम् अमूर्तम् अव्याबाधम् अनन्तं सुखं प्राप्नोति।[28] यः जीवः खलु इन्द्रिय-बल-आयु-उच्छ्वासस्वरूपैः चतुर्भिः प्राणैः जीवति, जीविष्यति, जीवितः पूर्वं स च जीवः वर्तते।[29] कुन्दकुन्दाचार्येण जीवानां स्वाभाविकप्रमाणं तथा च तेषां मुक्तामुक्तविभागः कृतः -

**अगुरुलहुगा अणंता तेहिं अणंतेहिं परिणदा सव्वे।**
**देसेहिं असंखादा सिय लोगं सणावमावण्णा।।**
**केचित्तु अणावण्णा मिच्छादंसणकसायजोगजुदा।**
**विजुदा य तेहिं बहुगा सिद्धा संसारिणो जीवा।।**[30]

अर्थात् अनन्तलघुगुरुकैः गुणांशैः तैः सर्वे जीवाः परिणताः सन्ति, देशैः प्रदेशैः वा असंख्याताः वर्तन्ते, केचन् कथञ्चित् सर्वं लोकम् आपन्नाः केचित् तु अनापन्नाः भवन्ति। तथा च बहवः जीवाः मिथ्यादर्शनकषाययोगयुताः संसारिणः सन्ति अपरे च तै वियुताः उत वा मिथ्यादर्शनकषाययोगरहिताः सिद्धाः सन्ति। जीवः आत्मा वा देहं कथं प्रभासयति इति सुन्दरं वर्णितम् आचार्येण -

**जह पउमरायरयणं खित्तं खीरे पभासयदि खीरं।**
**तह देही देहत्थो सदेहमेत्तं पभासयदि।।**[31]

उक्तमत्र यत् यथा पद्मरागरत्नं क्षीरे क्षिप्तं क्षीरं प्रभासयति तथैव देही देहस्य स्वामी, आत्मा वा अपि देहस्थः सम्भूय स्वदेहप्रमाणं प्रभासयति। स जीवः यद्यपि एकस्मिन् शरीरे क्षीरनीरवत् स्थितः भवति तथापि तत्र भेदः भवति भिन्नता वा भवति। जीवः भिन्नः शरीरं भिन्नमिति।[32] येषां जीवस्वभावः प्राणधारणरूपजीवत्वं नास्ति तथा च सर्वथा तस्य प्राणधारणरूपजीवत्वस्य अभावोऽपि नास्ति देहरहिताः वाग्गोचरातीताः च सिद्धाः जीवाः भवन्ति।[33] कुन्दकुन्दाचार्येण उक्तं यत् सिद्धजीवाः कार्यमपि न सन्ति, कारणमपि न वर्तन्ते, यथोक्तम् -

**ण कुदोचि वि उपण्णो जम्हा कज्जं ण तेण सो सिद्धो।**
**उप्पादेदि ण किंचि वि कारणमवि तेण ण स होदि।।**[34]

अर्थात् सः सिद्धः जीवः कुतश्चिदपि उत्पन्नः न भवति अतः कार्यं नास्ति तथा च अन्यत् किञ्चिदपि न उत्पादयति तेन सः जीवः कारणमपि न भवति। एवमत्र सिद्धस्य कार्यकारणभावस्य निरसनङ्कृतम्। जीवस्य भेदानां स्थावरत्रससिद्धानां विषये प्रोक्तं यत् सर्वे स्थावरजीवाः कर्मफलं विन्दन्ति, त्रसाः कार्ययुतं कर्मफलं विन्दन्ति तथा च सिद्धजीवाः प्राणित्वम् अतिक्रान्ताः ज्ञानञ्च विन्दन्ति।[35] ज्ञानात् भिन्नः ज्ञानी नास्ति, ज्ञानानि अनेकानि भवन्ति, अतएव ज्ञानिभिः द्रव्यं विश्वरूपम् अनेकरूपं वा भणितम्। स्पष्टार्थः अयमेव यत् आत्मा अनेकज्ञानात्मको भवितुमर्हति।[36] यथा ज्ञानविज्ञानयोः भिन्नत्वं न वर्तते तथैव द्रव्यगुणयोरपि भिन्नत्वं न भवत्येव। गुणानां कृते कस्यचिद् आश्रयः अपेक्षते, स च आश्रयः द्रव्यमेव नान्यत्। द्रव्यात् भिन्नाः गुणाः न प्राप्यन्ते कुत्रापि।[37] कुन्दकुन्दाचार्येण उक्तम् -

**अविभत्तमणण्णत्तं दव्वगुणाणं विभत्तमणण्णत्तं।**
**णेच्छंति णिच्छयण्हू तव्विवरीदं हि वा तेसिं।।**[38]

अर्थात् द्रव्यगुणानाम् अविभक्तम् अन्यत्वं तद्विपरीतं वा (विभक्तम् अनन्यत्वम्) न इच्छन्ति। अग्रे कुन्दकुन्दाचार्येण जीवस्य पञ्चभावाः प्रोक्ताः, यथा-

**उदयेण उवसमेण य खएण दुहिं मिस्सिदेहिं परिणामे।**
**जुत्ता ते जीवगुणा बहुसु य अत्थेसु वित्थिण्णा।।**[39]

अर्थात् उदयेन उपशमेन क्षयेण क्षयोपशमेन परिणामेन च युक्ताः जीवाः भवन्ति। एते पञ्च जीवगुणाः भावाः तत्त्वानि वा वर्तन्ते। एतेषामेव नामानि सन्ति- औदयकिभावः औपशमिकभावः क्षायिकभावः क्षायोपशमिकभावः पारिणामिकभावश्चेति क्रमशः। तथा च एतेषां नैकाः भेदाः सन्ति। तत्त्वार्थसूत्रे अप्युक्तम् -

**औपशमिकक्षायिकौ भावौ मिश्रश्च जीवस्य स्वतत्त्वम् औदयिकपरिणामिकौ च।।**[40]

जीवः यादृशं भावं करोति सः तस्य भावस्य कर्ता भवति। कर्मणा विना जीवस्य उदयः उपशमः क्षायिकः क्षायोपशमिको वा न विद्यते तस्मात् तु भावः कर्मकृतः वर्तते।[41]

कुन्दकुन्दाचार्येण कासुचित् गाथासु आत्मनः कर्मणां भावानां च कर्तृत्वविषये विशदं विवेचनं कृतम्। तत्र यदि भावः कर्मकृतः वर्तते तर्हि आत्मा द्रव्यकर्मणः कर्ता स्यात्? तत् कथं भवितुम् अर्हति? यतः आत्मा तु स्वकं भावं विहाय अन्यत् किञ्चिदपि न करोति। भावः कर्मनिमित्तः वर्तते चेत् पुनः कर्मणः जीवस्य भावः कारणं भवति परन्तु निश्चयेन भावः कर्मणः कर्ता नास्ति कर्म च भावस्य कर्ता नास्ति। परञ्च कर्तारं विना भवन्ति, इत्यपि नास्ति। वास्तविकरूपेण तु स्वकं स्वभावं कुर्वन् आत्मा स्वकस्य भावस्य कर्ता वर्तते न तु पुद्गलकर्मणाम् इति जिनवचनं ज्ञातव्यम्।[42] यदि कर्म कर्म करोति तथा च आत्मा आत्मानं करोति तर्हि कर्म आत्मने फलं कथं ददाति? तथा च आत्मा तस्य फलं किमर्थं भुङ्क्ते? इति। अयं लोकः सर्वतः विविधैः अनन्तानन्तैः सूक्ष्मैः बादरैः च पुद्गलकायैः पूर्णः भरितः वा वर्तते। तत्र आत्मा स्वस्य भावं करोति तत्र गताः पुद्गलाः आत्मनः स्वभावैः साकम् अन्योन्यावगाहरूपेण प्रविष्टाः कर्मभावं यान्ति।[43]

**जीवा पोग्गलकाया अण्णण्णोगाढगहणपडिबद्धा।**
**काले विजुज्जमाणा सुहदुक्खं देंति भुञ्जन्ति।**[44]

अर्थात् जीवाः पुद्गलकायाः अन्योन्यावगाहग्रहणेन परस्परबद्धाः सन्ति, काले वियुज्यमानाः सुखदुःखं ददति भुञ्जन्ति च। (पुद्गलकायाः सुखदुःखं ददाति जीवाश्च भुञ्जन्ति)। अतः जीवस्य भावेन संयुतं कर्म कर्ता वर्तते। निश्चयनयेन कर्म स्वस्य कर्ता व्यवहारनयेन

जीवभावस्य कर्ता विद्यते। भोक्ता तु तत् कर्म नास्ति, भोक्ता तु जीवः भवति चैतन्यत्वात् कर्मफलस्य कथञ्चित् आत्मनः सुखदुःखपरिणामानां तथा च कथञ्चित् इष्टानिष्टविषयाणां भोक्ता प्रसिद्धः वर्तते।[45] एवं प्रकारेण स्वकैः कर्मभिः कर्ता भोक्ता भवन् आत्मा मोहाच्छादितः पारम् अपारं संसारं परिभ्रमति।[46] अग्रे कुन्दकुन्दाचार्येण संक्षेपेण सारांशेन च जीवद्रव्यविषये गाथाद्वये विलिखितम् -

**एक्को चेव महप्पा सो दुवियप्पो तिलक्खणो होदि।**
**चदुचंकमणो भणिदो पंचग्गगुणप्पधाणो य।।**
**छक्कापक्कमजुत्तो उवउत्तो सत्तभंगसब्भावो।**
**अट्ठासओ णवट्ठो जीवो दसट्ठाणगो भणिदो।।**[47]

अर्थात् सः जीवः महात्मा नित्यचैतन्योपयोगी एक एव विद्यते, द्विविधः - ज्ञानदर्शनभेदकारणात्, त्रिलक्षणः - कर्मफलचेतना कार्यचेतना, ज्ञानचेतना च एभिः भेदैः लक्षितः उत वा उत्पादव्ययध्रौव्यैः लक्षितः, चतुश्चंक्रमणः - चतसृषु गतिषु भ्रमणात्, पञ्चाग्रगुणप्रधानः- औपशामिक-क्षायिक-क्षायोपशमिक-औदयिक-पारिणामिकपञ्चगुणैः एभिः प्रधानतायुतः, षट्-अपक्रमयुक्तः - चतस्रः दिशः उपरि अधश्च एवं प्रकारेण षड्विधभवान्तरगमनरूपेण अपक्रमेण युक्तत्वात्, सप्तभङ्गसद्भावः- स्याद्वादनयस्य सप्तभङ्ग्युतसद्भावस्य कारणत्वात्, अष्टाश्रयः - ज्ञानावरणादि-अष्टकर्मणाम् अथवा सम्यक्त्वादि-अष्टगुणानाम् आश्रयभूतत्वात्, नवार्थः- नवपदार्थरूपवर्तनत्वात्, दशस्थानगः-पृथ्वी, जलम्, अग्निः वायुः, साधारणवनस्पतिः, प्रत्येकवनस्पतिः, द्वीन्द्रियम्, त्रीन्द्रियम्, चतुरिन्द्रियम्, पञ्चेन्द्रियञ्च एतेषु दशस्थानेषु प्राप्तिकारणत्वात् दशस्थानगतः सः जीवः तथा च उपयोगी उपयोगसहितो वा भणितः इति। अन्ते च सः जीवः प्रकृतिस्थित्यनुभागप्रदेशबन्धैः सर्वतः मुक्तः ऊर्ध्वं गच्छति, शेषाः जीवाः भवान्तरं गच्छन्ति।[48]

**2. पुद्गलद्रव्यम् -**

षड्द्रव्येषु आत्मद्रव्यं विहाय द्वितीयं महत्त्वपूर्णं द्रव्यं विद्यते पुद्गलद्रव्यम्। आत्मानम् अतिरिच्य यद् किमपि अस्मिन् जगति वर्तते तद् सर्वं पुद्गलद्रव्यम्। आचार्येण उमास्वामिना पुद्गलद्रव्यस्य लक्षणं विलिखितम् -

**रूपिणः पुद्गलाः।**[49]
**स्पर्शरसगन्धवर्णवन्तः पुद्गलाः।**[50]

रूपिणः मूर्त्तिकाः वा पुद्गलाः भवन्ति। तथा च यः मूर्त्तिकः भवति सः स्पर्शरसगन्धवर्णवान् तु भवत्येव। पुद्गलकायः चतुर्विधः कुन्दकुन्दाचार्येण प्रोक्तः यथा -

**खंधा य खंधदेसा खंदपदेसा य होंति परमाणू।**
**इदि ते चदुव्वियप्पा पोग्गलकाया मुणेदव्वा।।**[51]

अर्थात् पुद्गलस्य चत्वारः भेदाः वर्तन्ते – स्कन्धः, स्कन्धदेशः, स्कन्धप्रदेशः, परमाणुः चेति। पुद्गलद्रव्याणि हि कदाचित्स्कन्धपर्यायेण, कदाचित्स्कन्धदेशपर्यायेण, कदाचित्स्कन्धप्रदेशपर्यायेण, कदाचित्परमाणुत्वेनात्र तिष्ठन्ति। नान्या गतिरस्ति। पुनश्चोक्तं तद्विषये –

**खंधं सयलसमत्थं तस्स दु अद्धं भणंति देसो त्ति।**
**अद्धद्धं च पदेसो परमाणू चेव अविभागी।।**[52]

स्कन्धः सकलसमस्तः पुद्गलपिंडात्मकसमस्तपदार्थः भवति, तस्य स्कन्धस्य अर्धं तु स्कन्धदेशः वर्तते, तस्य स्कन्धस्य अर्धार्धं स्कन्धप्रदेशः भवति तथा च अविभागी अविभक्तो वा परमाणुः भवति। बादरसूक्ष्मपरिणतानां स्कन्धानां कृते पुद्गलः इति व्यवहारः क्रियते। ते षट्प्रकाराः भवन्ति यैः त्रैलोक्यं निष्पन्नं वर्तते।[53] बादरबादराः, बादराः, बादरसूक्ष्माः, सूक्ष्मबादराः, सूक्ष्माः, सूक्ष्मसूक्ष्माः चेति।

1. बादरबादराः – काष्ठपाषाणादिकस्कन्धाः ये छेदने सति स्वयं संधानासमर्थाः भवन्ति।
2. बादराः – ये स्कन्धाः छेदने सति स्वयं संधानसमर्थाः भवन्ति, यथा– दुग्धम्, जलम्, रसः, घृतम् इत्यादिनि।
3. बादरसूक्ष्मः – ये स्कन्धाः सन्ति, परञ्च तेषां छेदनं भेदनम् उत वा हस्तादिद्वाराग्रहणं न शक्यते, यथा– छाया, आतपः, अन्धकारः, उद्योतः इत्यादयः।
4. सूक्ष्मबादरः – स्पर्शरसगन्धशब्दादयः सूक्ष्माः सन्ति तथापि स्थूलाः प्रतीयन्ते ते सूक्ष्मबादराः भवन्ति।
5. सूक्ष्माः – कर्मवर्गणादिस्कन्धाः ये सूक्ष्माः सन्ति तथा च येषाम् इन्द्रियैः ज्ञानं न भवति ते सूक्ष्माः भवन्ति।
6. सूक्ष्मसूक्ष्माः – अत्यन्तसूक्ष्माः कर्मवर्गणाभ्यो अधो द्वयणुकस्कन्धपर्यन्ताः सूक्ष्मसूक्ष्माः वर्तन्ते। एतेषां स्कन्धानां अन्तिमांशः परमाणुः अखण्डः भवति, तस्य लक्षणं कुन्दकुन्दाचार्येण प्रोक्तम् –

**सव्वेसिं खंधाणं जो अंतो तं वियाण परमाणू।**
**सो सस्सदो असद्दो एक्को अविभागी मुत्तिभवो।।**[54]

अर्थात् पूर्वोक्तानां सर्वेषां स्कन्धानां यः अन्त्यः अन्तिमभेदः वा वर्तते सः परमाणुः वर्तते तथा च सः अविभागी एकः शाश्वतः मूर्तिप्रभवः अशब्दश्चेति विलसति। सः च परमाणुः

आदेशमात्रमूर्त्तः उत वा भेदविवक्षया मूर्तत्वयुक्तः यतः परमार्थरूपेण तु परमाणोः स्पर्शरसगन्धवर्णानाम् अभेदः विद्यते। तथा च सः परमाणुः धातुचतुष्टकस्य (पृथ्वी, जलम्, अग्निः, वायुः च) कारणं वर्तते। परिणामगुणः अशब्दश्चेति विद्यते।[55]

सः परमाणुः प्रदेशतः एकप्रदेशत्वाद्वा नित्यः, न अनवकाशः अभिन्नास्तित्वयुतस्पर्शादिगुणेभ्यः अवकाशप्रदानत्वात्, न सावकाशः एकप्रदेशकारणेन द्वयादिप्रदेशानामभावत्वात् स्वयमेव आदिमध्यान्तयुतः वर्तते। सः परमाणुः स्कन्धानां भेत्ता एकप्रदेशेन स्कन्धानां भेदनकर्ता विद्यते, कर्ता अस्ति एकेन प्रदेशेन स्कन्धसङ्घातनिमित्तत्वात्। एकप्रदेशेन एकाकाशप्रदेशस्य अतिवर्तितद्गतिपरिणामापन्नेन समयलक्षणकालविभागकरणात् कालस्य प्रविभक्ता तथा च एकेन प्रदेशेन संख्यायाः विभाजको अपि वर्तते। यतोहि सः एकेन प्रदेशेन तत्सूत्रितद्वयादिभेदात् (त्रयः अणवः, चत्वारः अणवः, असंख्याः अणवः इत्यादयः) द्रव्यसंख्यायाः विभागः स्कन्धेषु क्रियते।[56] अयं परमाणुः गुणपर्याययुतं द्रव्यमेव वर्तते। सः एकरसवर्णगन्धम्, द्विस्पर्शम्, शब्दकारणम्, अशब्दम्, स्कन्धाधारितं द्रव्यं विद्यते।[57]

शब्दः पुद्गलद्रव्यस्य पर्यायः इति स्पष्टं कुर्वता आचार्येण उक्तम् –

**सद्दो खंधप्पभवो खंधो परमाणुसंगसंघादो।**
**पुट्ठेसु तेसु जायदि सद्दो उप्पादिगो वियदो।।**[58]

पूर्वोक्तस्कन्धजन्यः शब्दः स्कन्धश्च परमाणूनां सङ्घातः, तेषां स्कन्धानां परस्परस्पृष्टे सति शब्दः जायते, तथा च सः शब्दः उत्पादिकः उत्पाद्यः वा विद्यते।

पुद्गलद्रव्यविवेचने कुन्दकुन्दाचार्येण प्रोक्तम् –

**उवभोज्जमिंदिएहिं य इंदियकाया मणो य कम्माणि।**
**जं हवदि मुत्तमण्णं तं सव्वं पोग्गलं जाणे।।**[59]

अर्थात् इन्द्रियैः उपभोग्यविषयाः स्पर्शरसगन्धवर्णशब्दाः द्रव्येन्द्रियाणि स्पर्शनरसनघ्राणचक्षुःश्रोत्राणि, कायाः औदारिकवैक्रियिकाहारकतैजसकार्मणानि शरीराणि, द्रव्यमनः, द्रव्यकर्माणि तथा च अन्यदपि यत्किमपि मूर्तं भवति तत् सर्वं पुद्गलद्रव्यं भवतीति।

**3. धर्मद्रव्यम् –**

द्रव्यप्रकरणे 'धर्म' शब्दः एकः पारिभाषिकशब्दः वर्तते जैनदर्शने यथोक्तलक्षणे– 'गतिहेतुत्वं धर्मः।' अर्थात् जीवपुद्गलानां गमने धर्मद्रव्यं सहायकं वर्तते। कुन्दकुन्दाचार्येण विषये अस्मिन् विलिखितम् –

**धम्मत्थिकायमरसं अवण्णगंधं असद्दमप्फासं।**
**लोगागाढं पुट्ठं पिहुलमसखादियपदेसं।।**[60]

अर्थात् धर्मास्तिकायः अस्पर्शः अरसः अवर्णः अगन्धः अशब्दः लोकव्यापकः स्पृष्टः अखण्डो वा विशालः असंख्यातप्रदेशः च विद्यते। स्पर्शरसगन्धवर्णानाम् अत्यन्ताभावत्वात् अमूर्तिकः धर्मास्तिकायः, एतस्मादेव च अशब्दः, समस्तलोकाकाशे व्याप्तत्वात् लोकव्यापकः वर्तते। स च धर्मः अनन्तैः तैः अगुरुकलघुकैः सदैव परिणतः, गतिक्रियायुक्तानां कारणभूतः तथा च स्वयम् अकार्यः विद्यते।[61] उदाहरणेन प्रतिपाद्यते आचार्येण –

**उदयं जह मच्छाणं गमणाणुग्गहकरं हवदि लोए।**
**तह जीवपोग्गलाणं धम्मं दव्वं वियाणाहि।।**[62]

यथा लोके उदकं मत्स्यानां गमनानुग्रहकरं भवति तथैव धर्मद्रव्यं जीवानां पुद्लानाञ्च गमनानुग्रहकरं भवति इति कथनस्य अभिप्रायोऽत्र वर्तते। अत्र जलं मत्स्यान् बलात् गमनं न कारयति अपि तु स्वयमेव गच्छतां मत्स्यानां सहायकं वर्तते। तेन प्रकारेण एव धर्मद्रव्यमपि जीवपुद्गलानां गमने सहायकं विलसति, तान् बलात् गमनं न कारयति। परञ्च यथा जलेन विना मत्स्याः गमने असमर्थाः भवन्ति तथैव धर्मद्रव्येण विना जीवपुद्गलाः अपि गमने असमर्थाः भवन्ति।

**4. अधर्मद्रव्यम् –**

पूर्वम् अस्माभिः ज्ञातमिदं यत् धर्मद्रव्यस्य अर्थः 'गतिहेतुत्वम्' इति वर्तते। एवं प्रकारेणैव अधर्मद्रव्यस्य लक्षणम् स्थितिहेतुत्वमधर्मः। इति विद्यते। कुन्दकुन्दाचार्येण प्रोक्तम्–

**जह हवदि धम्मदव्वं तह तं जाणेह दव्वमधमक्खं।**
**ठिदिकिरियाजुत्ताणं कारणभूदं तु पुढवीव।।**[63]

अर्थात् यथा धर्मद्रव्यं भवति एकं विशिष्टं द्रव्यं तथैव अधर्मद्रव्यमपि एकं विशिष्टं द्रव्यं राजते। तथा च यथा धर्मद्रव्यं स्थितिक्रियायुक्तानां जीवपुद्गलानां जलमिव कारणभूतं सहायकं वा भवति तथैव अधर्मद्रव्यं अपि स्थितिक्रियायुक्तानां जीवपुद्गलानां पृथ्वी इव कारणभूतं सहायकं वा वर्तते। येन प्रकारेण पृथ्वी स्वयमेव स्थिता वर्तते न च अन्येषां स्थितिं कारयति अपितु स्वयमेव स्थितिरूपेण परिणमितम् अश्वादिकम् उदासीन–अविनाभावी–सहायरूपकारणमात्रम् इव स्थित्यर्थम् अनुगृह्णाति, तेन प्रकारेणैव अधर्मद्रव्यमपि स्वयमेव स्थितं वर्तते, न च अन्येषां स्थितिं कारयति अपितु स्वमेव स्थितिरूपेण परिणमितं भूत्वा जीवपुद्गलानाम् उदासीन–अविनाभावी–सहायकरूपकारणमिव स्थित्यर्थम् अनुग्रहं करोति। अन्यस्मिन् उदाहरणे यथा–

**ठाणजुदाण अधम्मो पुग्गलजीवाण ठाण सहयारी।**

**छाया जह पहियाणं गच्छंता णेव सो धरई।।**[64]

अत्र नेमिचन्द्राचार्येण प्रोक्तम् – जीवपुद्गलानां स्थितौ अधर्मद्रव्यं सहकारी-कारणं वर्तते, यथा- छाया गच्छतां पथिकानां बलात् स्थितिं न कारयति तथैव अधर्मद्रव्यमपि वर्तते।

गतिस्थितिकारणादेव धर्माधर्मद्रव्यसद्भावादेव च अलोकलोकयोः विभागः सम्भवति यतः धर्माधर्मद्रव्ये अलोके न भवतः तत्र तयोः अभावत्वाद्वेति। द्वौ धर्माधर्मौ विभक्तौ परस्परं पृथग्भूतेन अस्तित्वेन निष्पन्नौ विभक्तौ इति तथा च एकक्षेत्रावगाहनत्वात् अविभक्तौ इति। लोकप्रमाणौ अर्थात् समस्ते लोके जीवपुद्गलानां गतौ स्थितौ च निष्क्रियरूपेण अनुग्रहकरौ वर्तेते धर्माधर्मौ। यथोक्तम्-

**जादो अलोगलोगो जेसिं सब्भावदो य गमणठिदी।**
**दो वि य मया विभत्ता अविभत्ता लोयमेत्ता य।।**[65]

कुन्दकुन्दाचार्येण धर्माधर्मयोः निष्क्रियत्वम् उदासीनत्वं वा स्पष्टी कृतम् –

**विज्जदि जेसिं गमणं ठाण पुण तेसिमेव संभवदि।**
**ते सगपरिणामेहिं दु गमणं ठाणं च कुव्वंति।।**[66]

अर्थात् धर्माधर्मद्रव्ये गतिस्थितयोः मुख्यकारणं न वर्तेते अपि तु येषां गमनं विद्यते येषां गतिर्वा विद्यते तेषामेव पुनः स्थितिः गमनञ्च सम्भवति। येषाञ्च स्थितिः विद्यते तेषामेव पुनः गतिः सम्भवति। गतिस्थितिमानपदार्थाः तु स्वपरिणामैः गमनं स्थानञ्च कुर्वन्ति। अत्र इदमेव धर्माधर्मयोः निष्क्रियत्वम् उदासीनत्वं वा वर्तते।

**5. आकाशद्रव्यम् –**

आकाशम् एकं स्वतन्त्रद्रव्यं विद्यते। अस्य लक्षणम् 'अवगाहनहेतुत्वमाकाशद्रव्यम्' इति वर्तते। कुन्दकुन्दाचार्येण प्रोक्तम्-

**सव्वेसिं जीवाणं सेसाणं तह य पोग्गलाणं च।**
**जं देदि विवरमखिलं तं लोगे हवदि आगासं।।**[67]

यत् लोके जीवानां पुद्लानाञ्च कृते तथैव च शेषाणां सर्वेषां द्रव्याणां कृते अखिलम् अवकाशं ददाति तद् आकाशद्रव्यं भवति। जीवपुद्गलधर्माधर्मकालद्रव्याणि लोकात् अनन्यानि सन्ति परञ्च आकाशद्रव्यं तु अनन्तकारणात् लोकात् अनन्यत् अन्यत् च वर्तते।[68]

कैश्चित् शङ्का कृता यत् यदि गतिस्थितिकारणसहितम् अवकाशं ददाति तर्हि ऊर्ध्वगतिप्रधानाः सिद्धाः तत्र आकाशे कथं तिष्ठन्ति? अग्रे किमर्थं न गच्छन्ति? अत एव जिनवरैः सिद्धानां लोकाग्रे स्थानं प्रज्ञप्तम् इत्यस्मात् गतिस्थिती आकाशे न भवतः।[69] अलोके अपि आकाशं भवति परञ्च तत्र जीवानां सिद्धानां गतिस्थिती न वर्तेते तत्र धर्माधर्मयोः

अभावत्वात्। तत्त्वार्थसूत्रे अपि सूत्रं वर्तते -

**धर्मास्तिकायाभावात्।।**[70]

यदि आकाशं जीवपुद्गलानां गतौ स्थितौ च कारणं स्यात् तर्हि अलोकहानिः अर्थात् यत्र आकाशं भविष्यति तत्र जीवपुद्गलाः अपि भविष्यन्ति तथा च लोकस्य अलोकस्य च विभागः अपि तदा कथं शक्यते? द्वितीयश्च लोकस्य अन्तः एव प्राप्तः न भविष्यति यतः गतिस्थिती तु लोके एव प्राप्यते। अतः शङ्काकारेण अत्र या शङ्का कृता यत् आकाशं गतेः स्थितेश्च कारणं वर्तते। आकाशं गमनकारणं स्थितिकारणं च न भवति। गतिकारणं धर्मद्रव्यं स्थितिकारणञ्च अधर्मद्रव्यं भवतः।[71] धर्माधर्माकाशद्रव्याणि समानपरिमाणानि विद्यन्ते।

**6. कालद्रव्यम् -**

कालद्रव्यं वर्तनालक्षणं परिणमनहेतुत्वं वा वर्तते। कालः द्विविधः वर्तते- व्यवहारकालः निश्चियकालो वेति। यः परिणामादिलक्षणयुक्तः द्रव्याणां परिवर्तने कारणं भवति सः व्यवहारकालः भवति तथा च यस्य वर्तना एव वर्तते सः परमार्थकालः निश्चयकालो वा विद्यते। कुन्दकुन्दाचार्येण प्रोक्तम् -

**कालो परिणामभवो परिणामो दव्वकालसंभूदो।**
**दोण्हं एस सहावो कालो खणभंगुरो णियदो।।**[72]

अर्थात् कालः (व्यवहारकालः) जीवपुद्गलानां परिणामसमुत्पन्नः भवति। परिणामः (निश्चयकालः) उत वा जीवपुद्गलानां परिणामः बाह्यनिमित्तभूतद्रव्यकालस्य सद्भावात् उत्पन्नः भवति। अनयोः द्वयोः अयं स्वभावः भवति। अतः कालः क्षणभङ्गुरः क्षणिको वा नियतश्च वर्तते। निश्चयकालः द्रव्यरूपत्वात् नित्यः भवति तथा च व्यवहारकालः पर्यायरूपत्वात् क्षणिको भवति।[73] कालद्रव्यस्य अस्तिकायत्वं नास्ति। यतः कालद्रव्यत्वम् एकप्रदेशी भवति। यथोक्तमाचार्येण -

**एदे कालगासा धम्माधम्मा य पोग्गला जीवा।**
**लब्भंति दव्वसण्णं कालस्स दुणत्थि कायत्तं।।**[74]

अर्थात् कालाकाशे धर्माधर्मौ पुद्गलाः जीवाः च द्रव्यसंज्ञां लभन्ते। कालद्रव्यस्य कायत्वं न वर्तते अस्तित्वन्तु वर्तते एव। अमूर्तत्वञ्च प्रोक्तं कुन्दकुन्दाचार्येण

**आगासकालजीवा धम्माधम्मा य मुत्तिपरिहीणा।**
**मुत्तं पुग्गलदव्वं जीवो खलु चेदणो तेषु।।**[75]

आकाशकालजीवाः धर्माधर्मौ च अमूर्तद्रव्याणि वर्तन्ते। तथा च पुद्गलद्रव्यं मूर्तं विद्यते। तेषु षड्द्रव्येषु जीवद्रव्यं चेतनं वर्तते।

## सन्दर्भसूची -

1. जैन शिलालेख संग्रह, भाग–3, शिलालेख– 585
2. संस्कृत हिन्दी शब्दकोष, पृष्ठसंख्या– 519
3. सर्वार्थसिद्धिः– 5/2 गद्यांशः – 529)
4. तत्त्वार्थराजवार्तिकम् –5/2/1 पृष्ठसंख्या–436
5. तत्त्वार्थसूत्रम् – 5/29
6. तत्त्वार्थसूत्रम् –5/30
7. सर्वार्थसिद्धिः – 5/30/584
8. सर्वार्थसिद्धिः – 5/2/529
9. तत्त्वार्थसूत्रम् – 5/38
10. न्यायविनिश्चियविवरणम्– 1/115, पृष्ठसंख्या– 428
11. आप्तमीमांसा – 107
12. पञ्चास्तिकायः – 08
13. पञ्चास्तिकायः – 09
14. पञ्चास्तिकायः – 10
15. पञ्चास्तिकायः – 11
16. पञ्चास्तिकायः – 12
17. पञ्चास्तिकायः – 13
18. पञ्चास्तिकायः – 14
19. पञ्चास्तिकायः – 15
20. सर्वार्थसिद्धिः – 5/1/527
21. द्रव्यसंग्रहः – 24
22. पञ्चास्तिकायः – 22
23. पञ्चास्तिकायः – 23
24. तत्त्वार्थसूत्रम् – 2/8
25. तत्त्वार्थसूत्र् – 2/9
26. पञ्चास्तिकायः – 41,42
27. पञ्चास्तिकायः – 27
28. पञ्चास्तिकायः – 28
29. पञ्चास्तिकायः – 29
30. पञ्चास्तिकायः – 30
31. पञ्चास्तिकायः – 31,32
32. पञ्चास्तिकायः – 33
33. पञ्चास्तिकायः – 34
34. पञ्चास्तिकायः – 35
35. पञ्चास्तिकायः – 36
36. पञ्चास्तिकायः – 39
37. पञ्चास्तिकायः – 43
38. पञ्चास्तिकायः – 44
39. पञ्चास्तिकायः – 45
40. पञ्चास्तिकायः – 56
41. तत्त्वार्थसूत्रम् – 2/1
42. पञ्चास्तिकायः – 57–58
43. पञ्चास्तिकायः – 59–61
44. पञ्चास्तिकायः – 64–65
45. पञ्चास्तिकायः – 67
46. पञ्चास्तिकायः – 68
47. पञ्चास्तिकायः – 69
48. पञ्चास्तिकायः – 71–72
49. पञ्चास्तिकायः – 73
50. तत्त्वार्थसूत्रम् – 5/5
51. तत्त्वार्थसूत्रम्– 5/23
52. पञ्चास्तिकायः – 74
53. पञ्चास्तिकायः – 75
54. पञ्चास्तिकायः – 76
55. पञ्चास्तिकायः – 77
56. पञ्चास्तिकायः – 78
57. पञ्चास्तिकायः – 80
58. पञ्चास्तिकायः – 81
59. पञ्चास्तिकायः – 79
60. पञ्चास्तिकायः – 82
61. पञ्चास्तिकायः – 83
62. पञ्चास्तिकायः – 84
63. पञ्चास्तिकायः – 85
64. पञ्चास्तिकायः – 86
65. द्रव्यसंग्रहः – 18
66. पञ्चास्तिकायः – 87
67. पञ्चास्तिकायः – 89
68. पञ्चास्तिकायः –90
69. पञ्चास्तिकायः – 91
70. पञ्चास्तिकायः – 92,93
71. तत्त्वार्थसूत्रम् – 10/8
72. पञ्चास्तिकायः – 94–95
73. पञ्चास्तिकायः – 100
74. पञ्चास्तिकायः – 101
75. पञ्चास्तिकायः – 102
76. पञ्चास्तिकायः – 97